मुनिकुमारकयुगलमपि क्रमेण व्यतिक्रान्तबालकाल सुधाशनवेश्माधिरोहण यतिविरतिवेषभाषितानल्पविकल्पप्रासादकलशाधिरोहणमतिचिर चरित्रमाचर्य

अभयरुचिरवाप्तसानुजस्तत्र देवी-
वनरहसि विधाय प्रायमैशानकल्पम्।
धृतयतिपतिवृत्तो मारदत्तोऽपि भूय
समभजत तथैव स्वर्गलक्ष्मीविलासम्॥

रत्नद्वयेन समलङ्कृतचित्तवृत्तिः
सा देवतापि गणिनो महमाचरय्य।
द्वीपान्तरद्युनगजातजिनेन्द्रसद्म-
वन्दारुतानुमतकामपरायणाभूत्॥

ध्यान सिद्धगिरौ विधाय स मुनि॰ सम्यक्सुदत्ताह्वयः
कल्पे लान्तवनाम्न्यजायत सुर सर्वामरग्रामणी॰।
अन्ये ये च यशोमतिप्रभृतयस्तेऽपि प्रक्लृप्तव्रताः
सजातास्त्रिदशेश्वरा॰ सुकृतिभि॰ सकीर्त्यमानश्रिय॥

जयतु जगदानन्दस्पन्दी जिनोक्तिसुधारस-
स्तदनु जयतात्कामारामः सता फलसगमैः।
जयतु कवितादेवी शश्वत्ततश्च यदाश्रया-
त्कृतिमतिरिय सूते सूक्तिं जगत्रयभूषणम्॥

अभिधाननिधानेऽस्मिन्यशस्तिलकनामनि।
यशोधरमहाराजचरिते स्तान्मति॰ सताम्॥

एतामष्टसहस्रीमजस्रमनुपूर्वशः कृती विमृशन्।
कवितारहस्यमुद्रामवाप्नुयादासमुर्गं(?) च यश॰॥

श्रीमानस्ति सदैव सङ्घतिलको देवो यश पूर्वकः
शिष्यस्तस्य बभूव सद्गुणनिधि॰ श्रीनेमिदेवाह्वयः।
तस्याश्चर्यतपःस्थितेस्त्रिनवतेर्जेतुर्महावादिना
शिष्योऽभूदिह सोमदेव इति यस्तस्यैष काव्यक्रम॰॥

विद्याविनोदवनवासितकच्छुकेन
पुस्त व्यलेखि विलसल्लिपिरच्छुकेन ।
**श्रीसोमदेवरचितस्य यशोधरस्य**
सल्लोकमान्यगुणरत्नमहीधरस्य ॥

अपि च ।

यस्याक्षरावलिरधीरविलोचनाभि-
राकाङ्क्ष्यते मदनशासने लेखेषु(?) ।
तस्मै विवेकिषु न यच्छति रच्छकाय
को नाम लेखकशिखामणिनामधेयम् ॥

शकनृपकालातीतसवत्सरशतेष्वष्टस्वेकाशीत्यधिकेषु गतेषु(अङ्कतः८८१) सिद्धार्थसवत्सरान्तर्गतचैत्रमासमदनत्रयोदश्या **पाण्डवसिंहलचोलचेरमप्र**-भृतीन्महीपतीन्प्रसाध्य **मेल्याटी**प्रवर्धमानराज्यप्रभावे श्री**कृष्णराजदेवे** सति तत्पादपद्मोपजीविनि समधिगतपञ्चमहाशब्दमहासामन्ताधिपतेश्चा-**लुक्यकुल**जन्मन सामन्तचूडामणे श्रीम**दरिकेसरिणः** प्रथमपुत्रस्य श्रीम**द्वागराज**प्रवर्धमानवसुधाराया **गङ्गधाराया** विनिर्मापितमिद का-व्यमिति ॥

इति सकलतार्किकलोकचूडामणे श्रीम**न्नेमिदेव**भगवत शिष्येण सद्योनवद्यगद्यपद्य विद्याधरचक्रचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्री**सोमदेव**सूरिणा विरचिते **यशोधरमहाराजचरिते यशस्तिलका**परनाम्नि महाकाव्ये धर्मामृतवर्षमहोत्सवो नामाष्टम आश्वास ।

वर्ण. पद वाक्यविधि' समासो लिङ्ग क्रिया कारकमन्यतन्त्रम् ।
छन्दो रसो रीतिरलक्रियार्थौ लोकस्थितिश्चात्र चतुर्दश. स्यु' ॥

अब्दे सुधांशुयुगसिद्धिधरायुतेऽस्मि-
ञ्छुक्रानुजन्मनि शुभे युगपक्ष्मके च ।
दर्शातिथौ गुरुदिने वरकाव्यमेत-
द्यशोधरीयमगमत्सुसमग्रता हि ॥